(यद् शब्दः) जो।

यद्, ये, यानि १। यद्, ये, यानि २॥

(शकृत् शब्दः) विष्ठा, मल।

शकृत्, शकृती, शकृन्ति १। शकृत्, शकृती, शकृन्ति २। शकृता, शकृद्भ्याम्, शकृद्भिः ३। शकृते, शकृद्भ्याम्, शकृद्भ्यः ४। शकृतः, शकृद्भ्याम्, शकृद्भ्यः ५। शकृतः, शकृतोः, शकृताम् ६। शकृति, शकृतोः, शकृत्सु ७। स० प्रथमावत्।

(ददत् शब्दः) देता हुआ कुल

ददत्-द्, ददती, ददन्ति-ददति १। ददत्-द् ददती, ददन्ति-ददति २।

(तुदत् शब्दः) पीड़ा देता हुआ कुल

तुदत्-द्, तुदन्ती-तुदती, तुदन्ति १। तुदत्-द् तुदन्ती--तुदती, तुदन्ति २। शेष रूप शकृत् शब्द के समान

[भात् शब्दः] प्रकाश

भात्--द् भाती-भान्ती, भान्ति १। भात्-द्, भाती-भान्ती, भान्ति २। शेषरूप तुदत्--पुंवत्।

[पचत् शब्दः] पकाता हुआ कुल

पचत्, पचन्ती, पचन्ति १। पचत्, पचन्ती, पचन्ति २।

( दीव्यत् शब्दः ) खेलता हुआ कुल

दीव्यत्–द् दीव्यन्ती, दीव्यन्ति १। दीव्यत्–द्, दीव्यन्ती दीव्यन्ति २ शेषरूप लुदत् वत्।

( धनुष् शब्दः ) चाप, धनुस

धनुः, धनुषी, धनूंषि १। धनुः, धनुषी धनूंषि २। धनुषा, धनुर्भ्याम्, धनुर्भिः ३। धनुषे, धनुर्भ्याम्, धनुर्भ्यः ४। धनुषः, धनुर्भ्याम्, धनुर्भ्यः ५। धनुषः, धनुषोः धनुषाम् ६। धनुषि, धनुषोः, धनुषु–धनुष्षु ७। स० प्रथमावत ॥

इसी प्रकार चक्षुष् ( आँख ) हविष् ( होम की सामग्री ) पयस् ( जल, दूध ) ओकस ( स्थान ) शब्दों के रूप होते हैं।

( सुपुंस् शब्दः ) श्रेष्ठ पुरुषोंका कुल

सुपुम्, सुपुंसी सुपुमांसि १। सुपुम्, सुपुंसी, सुपुमांसि २। सुपुंसा, सुपुम्भ्याम्, सुपुम्भिः ३। सुपुंसे, सुपुम्भ्याम्, सुपुम्भ्यः ५। सुपुंसः सुपुंसोः, सुपुंसाम् ६। सुपुंसि, सुपुंसोः सुपुंसु ७।

[ अदस् शब्दः ] वह

अदः, अमू, अमूनि १। अदः, अमू, अमूनि २।

इति हलन्त नपुंसकलिङ्गाः शब्दाः समाप्ता ॥

याचनम् = माँगना । नर्त्तनम् = नाचना । निक्षेपणम् = फेंकना । प्रेषणम् = भेजना । वादनम् = बजाना । शयनम् = सोना । अवलम्बनम् = सहारा । करणम् = करना । भरणम् = भरना । धरणम् = धरना । अध्ययनम् = पढ़ना । अध्यापनम् = पढ़ाना । मानम् = तौलना । दर्शनम् = देखना । निष्क्रमणम् = निकलना । प्रवेशनम् = घुसना । अवगुण्ठनम् = घूँघट । लुण्ठनम् = लेटना । आरोहणम् = चढ़ना । अटाट्या = घूमना।

साधारणोपदेशः ( १ )

ईश्वरः सर्वव्यापकोऽस्ति । यौष्माकीणानि सर्वाणि कार्याणि सर्वदा पश्यति, किमप्यज्ञातं नास्ति । तद् गृहं शीघ्रं विनश्यति यस्मिन् गृहे सदा कलहो भवति । सज्जना यत्कर्मारभन्ते तन्मध्ये न त्यजन्ति । विपदि धैर्यमेव सहायतां करोति । विद्यासमं नास्ति धनं जगत्याम् । प्रतिवासिभिः सह मेलनं रक्षणीयम् । जनैः समैश्च सह बन्धुवद् वर्तितव्यम्, शरीरं पवित्रं रक्षणीयम् । बालकैः सह सर्वे जनाः स्नेहं कुर्वन्ति । अधर्मेण यद् धनमर्ज्यते, तन्न तिष्ठति यथाऽऽगच्छति तथैव गच्छति ।

---

इकट्ठा किया जाता है ।

साधारणोपदेशः (२)

कश्चिदपि जीवो न क्लेशनीयः। यथात्मनि सुखदुःखं भवति तथैव सर्वत्र विज्ञेयम्। यः शुद्धभावेन कार्यं करोति जगदीश्वरस्तस्य साहाय्यं करोति। परोपकारिणो जनाः सुखिनो भवन्ति। योऽन्येषां वृद्धिं दृष्ट्वा विषीदति स सर्वदा दुःखं लभते। यत्कार्यं स्वकीयाऽधिकारे भवेत् तत्सत्यतया कार्यम्। यो युष्माकं विश्वासं कुर्यात्तेन सह विश्वासघातो नहि कर्त्तव्यः। कटुभाषणं कदापि न विधेयम्, कटुवचनं सायकवद् हृदि क्षतं[१] करोति। दुर्जनानां संगतिः कदापि न कर्त्तव्या अनया हानिरेव भवति न तु लाभः। दुर्जनाः स्वमित्रैः सह विश्वासघातं[२] कुर्वन्ति, अतएव इत्थं भूतेषु नरेषु विश्वासो न विधेयः। धर्मकार्येषु विघ्ना बाहुल्येन भवन्ति, अतएव तत्करणे विलम्बो नहि कर्त्तव्यः।

साधारणोपदेशः (३)

शुभकर्मणां शुभं फलं भवति, अशुभकर्मणां चाशुभम्। मित्रं स एवास्ति य आपत्काले न विजहाति[३] शत्रुमधुराला-पमपि[४] कुर्यात्तथापि तस्य विश्वासो नहि कार्यः। महतामाज्ञा सर्वदा मन्तव्या। अनेनैव युष्माकं कल्याणमस्ति। अविचार्य[५] किञ्चिदपि कार्यं न कार्यम्, नोचेत् पश्चात्पश्चात्तापं करिष्यथ। असत्यं न भाषणीयम्, असत्यभाषिणां[६] कश्चिदपि विश्वासं न करोति। सविद्यस्य[७] नरस्य सर्वत्र प्रतिष्ठा भवति। मूढस्य[८]

---

१ घाव। २ धोखादेना। ३ छोड़ता है। ४ मीठा बोलना। ५ बिना विचारे के। ६ झूठ बोलनेवालों का। ७ पढ़े लिखे का। ८ मूर्ख का।

चाऽप्रतिष्ठा भवति । सर्वेषां शुभचिन्तकतायां स्थैर्यं न चाऽशुभचिन्तकतायाम् । मरणान्ते पापपुण्यमन्तरा नान्यत् सत्रा गच्छति । सर्वैः सह मधुरालापेन भाव्यम् कटुवचनं केनापि सह नोच्चारणीयम् ।

साधारणोपदेशः (४)

सद्गुणैर्मनुष्याः पूज्यन्ते । गुणमन्तरा[१] कस्याप्यादरो न भवति । यथा शुकान् सारिकाश्च[२] जनाः पालयन्ति न तु काकान्[३] । शिक्षाप्रदानि वाक्यानि न रोचन्ते[४] । इदं प्रायकं दृष्टम् । यथा यावत्कटुकं भेषजं न पीयते तावत् ज्वरो न नश्यति । महतां समीपे निवासेन लघवोऽपि महीयन्ते[५] इदं प्रत्यक्षमस्ति । यथा लता वृक्षमदृशी वर्धते । उपदेशोहि मूर्खाणां प्रकोपाय न शान्तये । पयः पानं भुजङ्गानां[६] केवलं विषवर्धनम् । पापकर्माणि कृत्वा कश्चिदपि सुखं न कामयेत[८] स कथं सुखभाग्[९] भवेत् ? । यथा—अर्कवृक्षारोपणेन[१०] किमसौ आम्रो भवितुमर्हति अपितु न ।

साधारणोपदेशः (५)

वेदः सत्यविद्यानां पुस्तकमस्ति तस्य पठनं पाठनं श्रवणं श्रावणं चार्याणां परमधर्मोऽस्ति । सत्यग्रहणकरणे

---

१ विना । २ मैना । ३ कव्वों को । ४ अच्छे लगते हैं । ५ छोटे ६ बड़े होजाते हैं । ७ सापों को । ८ चाहे । ९ सुखी । १० अकौंप के पेड़ लगाने से ।

असत्यस्य च परित्यागे सर्वदा सर्वैरुद्यतेन भाव्यम्। सर्वाणि कर्माणि धर्मानुसारेण सत्यासत्यं च विचार्य कर्त्तव्यानि सर्वैः सह प्रीतिपूर्वकं धर्मानुसारेण यथायोग्यं वर्त्तितव्यम् शिशवः! प्रभाते उत्थाय प्राणीश्वरस्य ध्यानं कुरुत, येन युष्मदर्थं नानाविधानि[१] वस्तूनि विरचितानि[२]। प्रातरुत्थाय यत्कार्यं क्रियते तस्मिन् मनः सम्यग् लगति यथा पठनं प्रभाते भवति न तथेतरस्मिन् काले संजायते। प्रातःकाले यत् स्मर्यते न तच्छीघ्रं विस्मर्यते, बुद्धिश्च विवर्धते।

साधारणोपदेशः (६)

उपहासो[३] वैरस्य मूलमस्ति, अतएवोपहासः केनापि सह न कर्तव्यः। यदि कश्चिद् युष्माकमुपहासं कुर्यादेवं वैरं च मन्येत तथापि युष्माभिर्नैवं कार्यम्, एवमेव करणेन युष्माकं कल्याणं भविष्यति। यो नरोऽनुपकारे[४] उपकारं[५] करोति स उत्तमः, योऽनुपकारेऽनुपकारं करोति स मध्यमः यश्चोपकारेऽनुपकारं कुरुतेऽसौ नीचः। मातपित्राचार्याणां ये बालकाः आज्ञां मन्तारस्त एव सुखं भोक्तारो भवन्ति। अभिवादनशीलस्य[६] नित्यं वृद्धोपसेविनः। चत्वारि तस्य वर्धन्ते आयुर्विद्यायशोबलम्॥

---

१ बहुत तरह के। २ बनाये हैं। ३ हँसी ठट्ठा। ४ बुराई में। ५ भलाई। ६ प्रणामकर्त्ता के।

साधारणोपदेशः ( ७ )

दुःखे केवलमीश्वर एव साहाय्यं करोति । तेनैव अस्मदीयानि शरीराणि मातुरुदरे विरचितानि । तेनैव च सकलानीन्द्रियाणि दत्तानि । यैरिन्द्रियैरूपरसगन्धस्पर्श शब्दादीन् विषयान् गृह्णीमः । यथा नेत्रेण रूपं पश्यामः । जिह्वया रसमास्वदामहे । नासिकया गन्धं जिघ्रामः । त्वचा स्पर्शं विजानीमः । श्रोत्रेण शब्दं शृणुमः । इमानि विश्वासी-न्द्रियाणि ज्ञानसाधनानि सन्ति । नेत्रे विकारे सति वयं द्रष्टुमसमर्थाः । सर्वं जगद् ध्यानमयं प्रतीयते । रस-नायां विकारे जाते सति मधुराम्ललवणकटुकषायतिक्तान् रसान् विज्ञातुमसमर्थाः । एवमेव सर्वत्र विज्ञेयम् । य इत्थ-मुपकर्ता किं तस्याज्ञा नहि मन्तव्या ? अपितु अवश्यमेव मन्तव्या स्वप्नेऽपि न विस्मर्तव्या सर्वदा तदाज्ञा पालनीया ।

साधारणोपदेशः ( ८ )

धर्मस्य सार्वभौमाणि कानि लक्षणानि इति जिज्ञासा वर्तते । धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्वि-द्यासत्यमक्रोधो दशकं धर्मलक्षणम् ॥१॥ वेदः स्मृतिः सदा-चारः स्वस्य च प्रियमात्मनः । एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम् ॥ १ ॥ इति मनुमहाराजेन धर्मचिह्नानि प्रदर्शितानि । किमेतानि सार्वजनीनानि उताहो विरुद्धानि । विज्ञानदृष्ट्या तु विश्वजनीनानि परन्त्वन्धपरम्परयाग्रहदोष-

वृद्धया विरुद्धविद्यया चेदं सकलं प्रतीपं प्रतीयते। वेद-विहितानि च यानि कर्माणि सन्ति तानि विश्वजनीनानि न तत्र पक्षपातः कश्चिदपि विद्यते।

साधारणोपदेशः (९)

अयि भो बालकाः! दया स्वर्गस्य सोपानमस्ति। पीडिताय जीवाय पीडादानं वरं नास्ति। अन्धं पङ्गुमङ्ग-विहीनं जनं दृष्ट्वा कदापि हास्यं न कार्यम्। न जाने युष्माकं शरीरेऽपीदृशी घटना संघटेत। कस्यापि निन्दा नहि कर्तव्या। कुसङ्गत्या सर्वदा दूरं स्थेयम्। सत्सङ्गत्या स्वयं जीवनं निवर्तितव्यम्। सदा पवित्रतया वर्तितव्यम्। नित्यं दन्तधावनं स्नानं व्यायामः सन्ध्योपासनं च करणी-यम्। मलिनानि वस्त्राणि कदापि नो धारणीयानि। मलिनैर्वस्त्रैरोगोत्पत्तिः संजायते। निवासस्थानं सर्वदा शुद्धं रक्षणीयम्। गृहाणां मलिनत्वेनापि रोगा उत्पद्यन्ते। वर्षाकाले पवित्रताया बाहुल्येन ध्यानं देयम्। कुतोऽस्मिन्ने-वर्तौ नानाविधा रोगा उत्पद्यन्ते॥

साधारणोपदेशः ( १० )

मिथ्याभाषणं कदापि न विधेयम्। अनृतवचनेन नर-स्यानादरो भवति। अतथ्यभाषिणां कश्चिदपि विश्वासं न विदधाति। यदा जनस्य विश्वासं गच्छति तदा स बाहु-ल्येन दुःखं प्राप्नोति। तथ्यवचनेन कदापि हानिर्न जायते

अपितु सर्वदा लाभ एव भवति । सत्यं धर्मस्य मूलं वै । इयं किं वदन्ती प्रसिद्धास्ति । सत्ये दुःखं न विद्यते । यावन्ति वस्तूनि यूयं संसारे लोकध्वे वेत्थ वा वस्तुतस्तेषां सर्वेषां स्वामी रक्षकः केवल ईश्वर एवास्ति । तेन जगदीश्वरेण मनुष्येभ्यः सर्वेभ्योऽधिका बुद्धिर्दत्तास्ति । ईश्वरः शुभकर्मभिः प्रसीदति, अशुभकर्मभिश्च नहि प्रसीदति । स सर्वत्र विद्यते सर्वेषां च कर्माणि पश्यति, अतएव कदापि पापं माचरणीयम् ।

साधारणोपदेशः ( ११ )

अयि भो शिशवः ! स्वकीयादायादधिको व्ययः कदापि नहि कार्यः । मिथ्या प्रशंसार्थम् ऋणमादाय व्ययकरणं महती मूर्खतास्ति । ऋणकरणं कदापि वरं नास्ति । कुतः ऋणी सर्वदा चिन्तातुरो भवति । यदा प्रतिज्ञाकाले धनं न दीयते तर्हि विश्वासो गच्छति । दुःखं च बाहुल्येन भुज्यते । धर्मशास्त्रेऽपि लिखितमस्ति ऋणिनो नरस्य मुक्तिर्न भवति । अतएव युष्मदर्थं रचितमस्ति स्वकीयादायादून्यूनव्ययं कुरुत येन सुखपूर्वकं जीवनम् निर्वाहयत ॥

साधारणोपदेशः ( १२ )

"बलमसि बलं मयि धेहि"

बलवतां बलदानकरं प्रभुं तमजरं ह्यमरं पितरं भजे ।

अस्मभ्यं बलस्य परमावश्यकता वेविद्यते । बलमन्तराऽस्माकं किञ्चिदपि कार्यं सिद्धिं न याति । ये बालका बलप्राप्त्यर्थं प्रथमं न प्रयतन्ते ते सर्वदा दुर्बला भवन्ति-दुःखं चानुभवन्ति । न च ते शारीरिकसुखं प्राप्नुवन्ति न च विद्यया मानसिकामुन्नतिं कर्त्तुमर्हन्ति । यावद् मानसं शरीरं च दृढं न संपादयिष्यथ तावद् यूयं स्वकीयायां जीवनयात्रायां साफल्यं न लप्स्यध्वे ।

पश्यत अन्येषां देशानां बालका बालिकाश्च कीदृशा हृष्टाः पुष्टाश्च भवन्ति । ते यथानियमं प्रातः सायं शरीर-रक्षणाय उचितं व्यायामं कुर्वन्ति । मनोदृढीकरणाय शिक्षा-प्रदानां पुस्तकानां स्वाध्यायं कुर्वन्ति । अस्माकं देश-वासिनां बालानामपि एवमेव सर्वदा शरीरं मनश्च दृढं सम्पादनीयम् । सैव कन्यका मातुः प्रिया भवति । या स्वकीयस्वास्थ्यस्य प्रतिक्षणं ध्यानं रक्षति

स एव बालकः पितुः प्रियो भवति यः सर्वदा स्वस्थी-भूय आत्मनीनं बलं वर्धयति ।

परमात्मानं वयं प्रार्थयामः, हे प्रभो ! बलमसि, बल-मस्मासु वितर ।

साधारणोपदेशः (१३)

'तेजोऽसि तेजो मयि धेहि" ।
तेजोमयं गणपतिं शरणं प्रपद्ये ॥

प्रकाशं सर्वेऽभिवाञ्छन्ति। अंधकारं के कामयन्ते ? बालका अन्धकारात् पलायन्ते । प्रकाशे ते सोत्साहं क्रीडन्ति । प्रकाशे न केवलं प्राणिनो वर्धन्ते अपितु वृक्षाः फलानि पुष्पाण्यपि फलन्ति फुल्लन्ति च । परमात्मा अस्मान् सदैव प्रकाशे रक्षेत् अन्धकाराच्च त्रायताम् ।

बालकाः ! मनुजानां मुखमण्डले या आभा दृश्यते तां वयं तेजः कथयामः । यस्य बालकस्य बालिकायाश्च मुखमंडले तेजोविराजते तं बालकं तां च बालिकां लोका मनोहरं मनोहरां वा भाषन्ते तेजोहीना बालकाः कुरूपा दृश्यन्ते । स्वास्थ्यमन्तरा तेजो नहि लभ्यते शारीरिकबलमन्तरा च स्वास्थ्यम् नो लभते । अतः शारीरिकबलद्वारा स्वास्थ्यं स्वास्थ्यद्वारा च अर्जयत तेजः । युष्मदीयानि मुखमण्डलानि तेजोमयानि देदीप्यमानानि च भवेयुः । यूयं सर्वदा तेजः पूजका भवेत । ईश्वरं प्रति प्रार्थयत, हे परमात्मन् ! त्वं तेजोराशिरसि वयमपि तेजस्विनो भूयास्म ।

---

साधारणोपदेशः (१४)

"ओम् क्रतो स्मर"

यावन्ति कार्याणि शुभानि लोके आदौ परेशस्तवन विधेयम । हे प्रयत्नशीला ! बालकाः ! ईश्वरं स्मरत । यूयं

मातरं पितरं च स्मरथ। सत्यामावश्यकतायां तयोः सनीडं प्रयाथ तौ प्रति वस्तूनि च याचध्वे। यूयं जानीथ, तौ पितरौ यौष्माकीणामावश्यकतां पूरयितुं शक्तौ स्तः एतदर्थमेव तौ प्रार्थयथ हस्तान् च प्रसारयथ। युष्माकं पित्रो रुपर्यपि काचिच्छक्तिशालिनी सत्तात्र संसारे विद्यते। सा च समस्तसंसारचक्रं प्रचालयति अखिलं ब्रह्माण्डं नियमे रक्षति। ईदृशीं शक्तिं विचारशालिनः सूक्ष्ममतय एव द्रष्टुं समर्था भवन्ति। यूयमपि तां शक्तिं (ईश्वरम्) प्रत्येकवस्तुनि सूक्ष्मदृष्ट्या पश्यत, असौ शक्तिर्युष्मभ्यं ज्ञानस्य बलस्य सुखस्य प्रीतेश्च दात्री अस्ति मेधां बलं सुखं च परमात्मनएव याचध्वम् ये बाला याश्च बालिकाः शुद्धहृदयेन प्रार्थयन्ते, ईश्वरस्तेषां प्रार्थनाम् अङ्गीकरोति। भ्रातरो! वयं समेत्य परमपितरं जगदीश्वरं स्मराम शर्म च लभामहै॥

साधारणोपदेशः (१५)

## "कृतं स्मर"

कृतानि कर्माणि च यानि कानि फलं थाकालमजोददाति। बालकाः! स्वकृतानि कार्याणि स्मरत। यत् किञ्चित् कृतं कर्म तद् ध्यानं दत्वा विचारयत। यद्येवं न कुरुथ तर्हि स्वकीयानुभवेन लाभं न लभध्वे। यदि युष्माभिरसावधानतया सकृदप्यनृतमुक्तम्। युष्माकं जनकेन

अध्यापकेन वा ताडनं कृतम् तर्हि द्वितीयवारे मिथ्याभाषणावसरे समागते पूर्वं ताडनं स्मृतिपथे आनीय कदाप्यनृतं न वदिष्यथ। युष्माभिः प्राक् कृतं कर्म अग्रे युष्मभ्यम् सुपथगमनशिक्षां ददाति। ये बालकाः स्वकीयाभिरसावधामताभिः शिक्षां न लभन्ते ते स्वीये जीवने आत्मोन्नतिं कर्त्तुं न पारयन्ति। उन्नतिकरणाय इत्यावश्यकम् यद् वयमात्मनीनानि कर्माणि स्मराम। कदाकदाचैकान्ते समुपविश्य स्वकीयं भूतकालं विचारयाम। एवं करणेन वयं स्वकीया असावधानतास्त्यक्तुं शक्ताः स्याम अग्रे च सावधानीभूय शुभानि कार्याणि कर्त्तुं समर्थाः स्याम। प्रभो अस्मभ्यं शक्तिं प्रदायानुगृहाण येन वयं शुभकर्मकर्त्तारः स्याम॥

साधारणोपदेशः ( १६ )

"पापो नृपद्वरो जनः"

भवति पापरतो ह्यलसो जनः।

तुन्दपरिमृजो मनुजः पापीयान् भवति। इदं कथम्? ये मानवा अलसा जायन्ते तेषां मस्तिष्कं सदा कुविचारान् विचारयत् तिष्ठति। अकर्मण्यता आलस्यं च सर्वदोषाणामाकरः। यावच्छक्यं तावदाभ्यां द्वाभ्यामात्मा रक्षणीयः। त्राणस्यैक एवैष उपायः सर्वदा शुभेषु कृत्येषु मनोनियोजनीयम्। मातापित्रोः सेवा शुश्रूषा, भ्रातॄणां भगिनीनां साहाय्यम्। मित्राणां सहयोगः तथाऽध्यापकवर्गस्य सत्कारः

समादरश्च । इमानीदृशानि कार्याणि सन्ति येषु बालकैः सर्वदा मनो नियोजनीयम् ।

बालकैः सदा शुभकर्मसु प्रीतिर्विधेया । समाजस्य राष्ट्रस्य च सर्वप्रकारैः सेवा करणीया । ये बालकाः कार्यमकुर्वन्तः काले यापयन्ति ते पापबीजानि वपन्ति कष्टफलानि चानुभवन्ति अकर्मण्यानामालस्यं परिवेष्टयति । आलस्यं स्वकं शत्रुं विज्ञाय सदा तस्माद् दूरं स्थेयम् ।

साधारणोपदेशः ( १७ )

इन्द्र इच्चरतः सखा ।

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः ।

ये स्वकीयां सहायतां स्वयं कुर्वन्ति ईश्वरोऽपि तेषां साहाय्यं विदधाति । ये हस्ते हस्ते धृत्वा तिष्ठन्ति, तेषां कोऽपि सहायको न भवति । बालो यावच्चलनाय स्वयं न यतते तावत् कदापि चलनं नायाति यावद् यूयं स्वयं स्वाध्यायकरणं न प्रयतिष्यध्वे तावद् विद्या नायास्यति न च यूयं विद्वांसो भविष्यथ । प्रत्येकव्यक्तया पुरुषार्थेन भाव्यम् । पुरुषार्थकर्त्तार एव पुरुषपदभाजो भवन्ति । पुरुषार्थहीना व्यक्तयो जीवनयात्राधावनेऽग्रसरा नो भवन्ति । ये बालकाः पुरुषार्थं न कुर्वन्ति ते विद्याक्षेत्राद् बहिर्मुखा भवन्ति । याः कन्यकाः पुरुषार्थं न कुर्वते ता बलं बुद्धिमायुष्य विद्यां च न लभन्ते ।

साधारणोपदेशः ( १८ )

"तेजस्विनावधीतमस्तु" ।

अस्माभिः पठितं पवित्रममलं तेजोमयं जायताम् । यदस्माभिः किमप्यधीतं तत्तेजस्वि भूयात् अस्मदीया विद्या भूमण्डले सर्वत्र प्रसृता स्यात् । येनाऽन्यदेशनिवासिनस्तामधिगम्य स्वात्मोन्नति कुर्युः । यदि दीपकस्याग्रे आवरणं भवेत्तर्हि तस्य प्रकाशप्रसारस्यावरोधो भवति प्रतिवासिनां तस्मात् प्रकाशात् कोपि लाभो न जायते एवमेव विद्यां प्राप्य विद्वांसः स्वविद्यया पार्श्वस्थान् जनान् न शिक्षन्ते तर्हि विज्ञेयं तेषां विद्यायाः प्रकाशो नहि जातः । ईदृशस्य पुरुषस्य विद्यया कोपि लाभो न जायते ।

विद्यास्वरूपोऽन्येषां प्रकाशाय विद्यते । अतोऽनया विद्यया अविद्वांसो विद्वांसः सम्पादनीयाः स्वगृहे स्वीयनगरे स्वकीयप्रान्ते तथा सर्वत्रदेशे विद्यायाः प्रसारः कार्यः । अविद्याया नाशो विद्यायाश्च वृद्धिः कार्या । ईदृशो नियमः श्रीस्वामिदयानन्दमहाराजेन सर्वेषां सज्जनानां लाभाय निरमायि ।

—❀—

साधारणोपदेशः ( १९ )

कलहकर्म सदा परिहीयतां भगवती श्रुतिराह विवेकदा । वयं परस्परं कलहं नहि विधास्यामः, इयं कीदृशी सुन्दरा-

प्रतिज्ञाऽस्ति । ये बालकाः परस्परं कलहायन्ते तेषां स्वभावो दूषितो भवति । ते सुखं न लभन्ते । कलहप्रियबालका न स्वगृहे आदरं लभन्ते न च विद्यालये, न ते स्वपित्रोः प्रिया भवन्ति न च स्वकीयाध्यापकानाम् । तेषां सर्वत्र दुर्गतिर्जायते ।

एकदा रामश्यामौ उभौ भ्रातरौ यौ महता प्रेम्णा निवसतः स्मः ताभ्यां विचारितम् , मनुजाः परस्परं कया रीत्या कलहं कुर्वन्ति । रामेणोक्तम् , आगम्यताम् । अहं तुभ्यं कलहशिक्षां ददामि । अहमेकं कन्दुकं समक्षं रक्षामि, अहं वदिष्यामि इदं कन्दुकं मदीयमस्ति त्वया वाच्यम् , नहीदं कन्दुकं मदीयं विद्यते । एवं परस्परं वदद्भ्यामावाभ्याम् कलहः सम्पत्स्यते ।

रामेणैकं कन्दुकं समक्षे रक्षितम्-प्राह च एतत् कन्दुकं मामकीनम् श्यामः प्राह नहि नहि एतत् कन्दुकं मामकं विद्यते । रामेण तरसा पुनः प्रोक्तम्-कदापि नो इदं कन्दुकं ममैवास्ति । श्यामेनापि बलेनोत्तरितम्—नहितेममैवास्ति । रामेण गदितं मिथ्याभाषी भवान् , इदं कन्दुकं ममैवास्ति । श्यामेन प्रोक्तं समीचीनतरम् मदीयं मस्तकं कथा पीडयते भवता, यदि युष्मदीयं कन्दुकं विद्यते तर्हि युष्माभिर्गृहीतव्यमिति कलहः समाप्तिं गतः । शान्तं पापम् ।

साधारणोपदेशः ( २७ )

सूर्यस्य पश्य श्रेयमाणम्, यो न तन्द्रयते चरन्।
सूर्यो भ्राम्यति नित्यमेव गगने आभा दरीदृश्यताम्॥

हे बालकाः! सूर्यस्य शोभां पश्यत, अनलसः सूर्यः स चरन्नेव इमं लोकं प्रकाशयति। भानुः सदा प्रकाशं प्रयच्छति क्षणमपि भास्करः प्रकाशं न दद्यात् तर्हि समस्त-संसारस्य विध्वंसो भवेत्। सूर्यस्य शोभा निरन्तरप्रकाश-दानेनैव विद्यते। रविः कदापि प्रकाशदाने शैथिल्यं न विदधाति। बालकाः! यूयमपि सूर्यतुल्यं सततं कार्यं कुरुत।

कार्यकरणपरिश्रमात् कदापि न विभीत। तपनः कदापि शैथिल्यं न कुरुते, अतो युष्माभिरपि शैथिल्याद् दूरं स्थेयम्। ये बालकाः सूर्यसमानं पुरुषार्थं करिष्यन्ति, प्रमादमालस्यं त्यक्ष्यन्ति, तेषां यशोराशिः सर्वत्र शिष्यते। यत् कार्यं युष्माकं सम्मुखम् आगच्छेत् तन्मनो नियोज्य विधेयम्। परिश्रमात् पलायनं समीचीनं न विद्यते। अन-लसाः शूरा योद्धारो विजयिनश्च भवन्ति, परिश्रमप्रिया एव नीरोगा धनिका जायन्ते। परिश्रम एव मनुष्यमुन्नमयति। वीरभोग्या वसुन्धरा

साधारणोपदेशः ( २१ )

"शेरेऽस्य सर्वेपाप्मानः, श्रमेण प्रपथे हताः"

उद्योगिनां नश्यति पापपुंजः।

पुरुषार्थिनां पुरुषाणां सर्वाणि पापानि परिश्रमेण क्षयं यान्ति। बालका! वेदस्येयं कीदृशी सर्वथा सत्या पवित्रा सुशिक्षाऽस्ति यदा यूयं पठने परिश्रमं न कुरुथ तदा मातुः पितुरध्यापकानां च समक्षेऽनृतं वदथ. यूयं नैत्यिकं कार्यं परिश्रमेण कुर्वन्तस्सन्तःस्थास्यथ तर्हि मिथ्याभाषण-करणस्य काप्यावश्यकता न भविष्यति। यथाऽनृतस्य पापं परिश्रमद्वारा नश्यति तथैव सत्यव्यवहारेण सर्वे विश्वासं कुर्वन्ति। परिश्रमिणो जनाः सदा पुण्यपथं व्रजन्ति. ते समस्तदोषेभ्यो मुच्यन्ते। अलसा एव मानवाः पापानामा-करा भवन्ति अतः परिश्रमात् कदापि पलायनं न कार्यम्, यस्य देशस्य पुरुषाः पुरुषार्थिनो भवन्ति स देशः समुन्नतिं गच्छति दृश्यतां जगप्राण (जापान) निवासितां समुन्नतिः यस्य देशस्य बालकाः अलसाः प्रमादिनो दीर्घसूत्रिणो भवन्ति स देशो दुर्गति प्रयाति। दीर्घसूत्री विनश्यतीति।

साधारणोपदेशः (२२)

"मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा"

परस्परं सदा प्रेम्णा भगिन्यो भ्रातृभिः सह।
वेदशिक्षां समाश्रित्य प्रवर्तेरन् प्रयत्नतः॥

भ्रातरः स्वसॄर्न द्विषन्तु न च स्वसारो भ्रातॄन्। येषु गृहेषु भ्रातृषु स्वसृषु च कलहो भवति तेषु सदनेषु सुखं

शान्तिश्च न तिष्ठति। येषु परिवारेषु सर्वे बालाः परस्परं मिलित्वा मधुरं व्यवहारं कुर्वते स्वकीयमातृः पितॄंश्च हर्षयन्ति, तेषु परिवारेषु स्वर्गोपमंसुखं जायते। एकस्मिन् गृहे विजयशारदानामके भ्रातृभगिन्यौ निवसतः स्म। एकदा तज्जनकेन हट्टतो द्वे पुस्तके क्रीत्वानीते। एकस्मिन् मनोहराणि चित्राण्यासन्. द्वितीयं चित्र रहितम्। सचित्रं पुस्तकं विजयाय प्रदत्तम्, तस्मिन्नेव काले विजयेन स्वपितरं प्रत्युक्तम् एतत् सुन्दरं सचित्रं पुस्तकं शारदायै देयम्. इयं मदीया कनिष्ठा भगिनी विद्यते. मनोज्ञेषु वस्तुषु अस्या एकाधिकारास्ति। श्रुत्वैव शारदोवाच नहि नहि जनक! एतत्पुस्तकं मम ज्येष्ठसहोदराय विजयायैव दातव्यम् कुतोऽहं कनिष्ठास्मीति। एवं भ्राता भगिनी परस्परं प्रसादयितुं वाञ्छतः। एतद् दृष्ट्वा जनकोऽतीव प्रसन्नः संजातः। तेन द्वाभ्यां साधुवादो दत्तः, द्वे पुस्तके चान्ये क्रीत्वानीते। उभाभ्यां द्वे द्वे पुस्तके दत्ते सचित्राचित्रे च। बालकाः।! युष्माभिरपि एवमेव स्वगृहे वर्तितव्यमिति।

साधारणोपदेशः (३)

किल्लोक्यमिति ? ब्रह्मचर्यमेवेति"

किंहित विद्यते लोके ब्रह्मचर्यं महद्धितम्।

अनेन ब्रह्मचर्येण प्रथितौ हनुमद्भीष्मौ

लोकानाम् जनानाम्' हितकरं किं विद्यते ? -ब्रह्मचर्यमेव जनाना हितकारकम्। बालकाः! यूयं ब्रह्मचारिणः

उच्यध्वे । किं कदापि युष्माभिर्विचारितम् एतेषां शब्दानां कोऽर्थः ? । ब्रह्मचारिणः स एवार्थो न विद्यते, योऽर्थो विद्यार्थिनो भवति । विद्याप्राप्तिकारका विद्यार्थिनः कथ्यन्ते । परन्तुमनसः देहस्यात्मनश्च शक्तीनां वर्धकोब्रह्मचारी भवति । ब्रह्मचर्यशब्दस्य प्रयोगोऽन्यासु कास्वपि भाषासु न लभ्यते । बालका ! ब्रह्मचर्यशब्दो युष्माकमाशाना-मुन्नायकोऽस्ति । सदाचारमन्तरा कोऽपि विद्यार्थी ब्रह्मचारी नहि भवितुमर्हति । अतो मानसेन्द्रियनिग्रहेण सदा भाव्यम् । शरीरं व्यायामेन पुष्टं बलिष्टं संपादयत । ब्रह्मचारिणा गात्रं सुदृढं मनः पवित्रं बुद्धिश्चोज्ज्वला भवति । ब्रह्मचारिणो मुखमण्डले वीर्यतेजो विराजते । वीर्य-रक्षणमेव ब्रह्मचर्यस्य मुख्यं साधनम् । अतएव वीर्यरक्षणे सदाऽवधानतया भाव्यम् । मरणं विन्दुपातेन जीवनं विन्दु धारणात् ॥

## साधारणोपदेशः ( २४ )

### "मित्रस्य चक्षुषा समीक्षामहे ।

निगमज्ञानप्रदः परमेश्वरो नयतु नः सुपथा रविचन्द्रयोः । वयं मित्रदृष्ट्या सर्वान् पश्याम । इमां वेदाज्ञां सदा स्मरत । यूयमात्मसदृशान् बालान् स्वमित्राणि मन्यध्वे । सदा यूयं तरुणा भवेयुस्तदा सर्वान् मानवान् मित्रदृष्ट्या पश्यत एवं करणेन मनुष्यसमाजात् ईर्ष्याद्वेषौ नंक्ष्यतः सर्वे जना

भ्रातृव्यवहारेण वर्त्तिष्यन्ते। परस्परं कलहं त्यक्ष्यन्ति। मित्रदृष्टिव्यवहारेण सर्वत्र प्रेमप्रसारो भविष्यति, एवं करणेन सर्वेषां कल्याणं भविष्यतीति ॥

साधारणोपदेशः ( २५ )

"इदमहमनृतात् सत्यमुपैमि"

सत्यं वदामि सततं श्रुतिसारभूतम्।
मिथ्यां त्यजामि च भजामि च देवदेवम् ॥

असत्यं विहाय सत्यं गृह्णामि। अनेन व्यवहारेण-मनुष्या देवा भवितुमर्हन्ति। वेदोपदेशं समाश्रित्य श्री महर्षिणा दयानन्दस्वामिना आर्यसमाजस्य चतुर्थे नियमे विन्यस्तम् सत्यस्य स्वीकारे असत्य च परित्यागे सर्वदोद्यतेन भाव्यम्। सत्यभाषिण एव देवा कथ्यन्ते मिथ्याभाषिणो-लोकनिन्दा पात्राणि भवन्ति। अनृतवादिनां कश्चिदपि विश्वासं न विदधाति न च सम्मानं कुरुते। सत्यस्यासन-मुच्चतमं विद्यते, सत्यभाषी सर्वत्रादरं लभते।

ये वाला अनृतभाषिणो भवन्ति तान् न च पितरौ विश्वसतः, न चाऽध्यापकाः स्निह्यन्ति। यदि कदापि भयाद् अनृतं भाषध्वं तथापि स्वकीयं दोषं मन्यध्वम्। दण्डभयात् स्वीयं दोषं नहि रोद्धव्यम्, एवं करणेन युष्माकं हृदये साहसो जनिष्यते यूयं च नानृतं वदिष्यथ। उक्तं च।

नहि सत्यात् परो धर्मो नानृतात् पातकं महत्।
तस्मान्मिथ्या परित्यज्य सदा सत्यं समाचरेत् ॥१॥

## प्रार्थना

प्रभो ! मयि धेहि विज्ञानं तरेयं दुःखसागरतः ।
त्वदीयां प्रेम्णा भक्तिं धरेयं शाश्वतं धातः ॥१॥
विचित्रो निर्मितः कायो द्विधानि चेन्द्रियाणीति ।
यथास्थानं यथाकामं त्वमेवं तात ! हे दातः ॥२॥
इमानि पञ्चभूतानि पृथिव्यप्तैजसादीनि ।
समानि सर्वतः कृत्वा अहो सृष्टे सरीसृत्तः ! ॥३॥
विभो मातः पितः भ्रातः सकलसंसारचक्रकर्त्ता ।
त्वमेव मुक्तिदा ! स्रोतः ! अहो आनन्ददादातः ॥४॥
त्वदीयं शरणमापन्नो मदीयं छिन्धि अघग्रन्थिम् ।
भरेयं भावनां शुद्धां जयेयं मानसं ज्ञातः ॥५॥

## ॥ चर्पटपञ्जरिका स्तोत्रम् ॥

दिनमपि रजनी सायं प्रातः शिशिरवसन्तौ पुनरायातः ।
कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशा वायुः ॥१॥
भज विश्वेशं भज विश्वेशं विश्वेशं भज मूढमते ! ।
प्राप्ते सन्निहिते मरणे नहि नहि रक्षति डुकृञ् करणे ।

ध्रुवपदम् ।

अग्रे वह्निः पृष्ठे भानू रात्रौ चुबुकसमर्पितजानुः ।
करतलभिक्षा तरुतलवासस्तदपि न मुञ्चत्याशापाशः ॥भज०
यावद् वित्तोपार्जनसक्तस्तावन्निजपरिवारोरक्तः ।
पश्चाद् धावति जर्जरदेहे वार्तां कोऽपि न पृच्छति गेहे ॥भज०

जटिलो मुण्डो लुञ्चितकेशः काषायाम्बरबहुकृतवेषः ।
पश्यन्नपि च न पश्यति मूढ उदरनिमित्तं बहुकृतवेषः ॥भज०
अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम् ।
वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशापिण्डम् ॥भज०
बालस्तावत् क्रीडासक्तस्तरुणस्तावत्तरुणीरक्तः ।
वृद्धस्तावच्चिन्तामग्नः पारे ब्रह्मणि कोऽपि न लग्नः ॥भज०
पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम् ।
इह संसारे भवदुस्तारे कृपयाऽपारे पाहि अनादे ! ॥भज०
पुनरपि रजनी पुनरपि दिवसः पुनरपि पक्षः पुनरपिमासः ।
वयसि गते कः कामविकारः शुष्के नीरे कः कासारः ।
नष्टे द्रव्ये कः परिवारो ज्ञाते तत्त्वे कः संसारः ॥भज०
कस्त्वं कोऽहं कुतआयातः का मे जननी को मे तातः ।
इति परिभावय सर्वमसारं विश्वं त्यक्त्वा स्वप्नविचारम् ।भज०
यावज्जीवो निवसति देहे कुशलं तावत् पृच्छति गेहे ।
गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन् काये ॥भज०॥
सुखतः क्रियते रामाभोगः पश्चाद् हन्त शरीरे रोगः ।
यद्यपि लोके मरणं शरणं तदपि न मुञ्चति पापाचरणम् ।भज०
कुरुते गङ्गासागरगमनं व्रतपरिपालनमथवा दानम् ।
दानविहीने सर्वमनेन मुक्तिर्न भवति जन्मशतेन ॥ भज०

इति श्रीमच्छंकराचार्य विरचितं चर्पटपञ्जरिका स्तोत्रं
॥ समाप्तम् ॥

* ओ३म् *

संस्कृत - शिक्षा

# चतुर्थो भागः

प० जीवारामोपाध्यायप्रणीतः

मुरादाबादनगरे
सरस्वतीनाम्नि मुद्रणयन्त्रे,
अङ्कयित्वा प्राकाश्यं नीतः।

प्रकाशकः—
सरस्वती-प्रेस
प्रकाशक तथा विक्रेता
मुरादाबाद ( यू० पी० )

संवत् २००३ } { मूल्यम् ।।।)

* ओ३म् *

# संस्कृत–शिक्षा

# चतुर्थ भाग

अजरं विभुं करुणाकरं त्रयतापहरं सुखदं परम्,
पुरुषं पुरोहितमादिदेवमजं महोच्चतमं गुरुम् ।
निजशक्तिसृष्टिकरं बुधं परमं पदं श्रुतिज्ञानम्,
प्रणमामि सम्प्रति सादरेण नतोऽमरं परमेश्वरम् ॥

( लेखक )
संस्कृत के प्रकाण्ड विद्वान अनेकों
संस्कृत ग्रन्थों के निर्माता
श्री० पं० जीवारामोपाध्याय

## आवश्यक–कथन

प्रिय अध्येतृवृन्द ! आप अब तक लिंग और कारकों के अनुकूल अनेक प्रातिपदिक शब्दों के रूपों तथा सन्धि-विषय का ज्ञान प्राप्त कर चुके हैं। इस चतुर्थ भाग में क्रिया-प्रकरण दिया जाता है जिससे दोनों का उचित प्रयोग कर अनुवाद को तीव्र गति से बढ़ाया जासके।

## काल और लकार ( Tenses and moods )

'वह पढ़ता है' 'उसने पढ़ा' 'वह पढ़ेगा' इन तीनों वाक्यों का काल हिंदी और संस्कृत में भी क्रम से वर्तमान (Present)

भूत ( Past ) और भविष्यत् (Future) है । संस्कृत में क्रिया के वर्तमान काल सूचक रूप 'लट्' के, सामान्य ( जिसमें कोई शर्त नहीं ऐसे ) भविष्यत् सूचक रूप 'लृट्' के; एवं सामान्य भूत काल सूचक रूप 'लुङ' के रूप कहे जाते हैं।

एक लोट् लकार है जो 'तुम पढ़ो' 'मैं खाऊँ' ? वे आयुष्मान् हों इत्यादि रूप से विधि ( आज्ञादि ) और आशीर्वाद दोनों में से किसी भी अर्थ को सूचित करने के लिये प्रयुक्त किया जा सकता है।

जब इस प्रकार के वाक्य का अनुवाद करना हो कि 'यदि परिश्रम करते तो उत्तीर्ण होजाते' अर्थात् जहां एक क्रिया का होना दूसरी क्रिया के होने पर आश्रित हो, जहाँ हेतु और हेतुमत् साथ देने हों तो वहाँ 'लृङ्' के रूप लाते हैं। वर्तमान और भविष्यत में हेतु हेतुमत् के लिये लट् और लृट् के रूप भी प्रयुक्त किये जाते हैं।

इस प्रकार लट् लृट् लोट् लुङ् और लङ् इन ५ ( हर एक में ल् लगा रहने से ) लकारों से अनुवाद का काम चल जाता है। परन्तु संस्कृत में इनके अतिरिक्त भी ५ लकार हैं, उनका ज्ञान करना भी यहां प्रकरणानुकूल आवश्यक होने के अतिरिक्त इसलिये भी उपयोगी है कि आप उनका प्रयोग चाहें करें या न करें, परन्तु दूसरे लेखकों के लेखों में व्यवहृत उन लकारों के प्रयोगों का अर्थ समझ सकें, साथ ही उन्हें जान लेने पर स्वयं भी प्रयुक्त कर ही सकेंगे।

## भूतकाल में ३ लकार

भूतकाल में लुङ् के अतिरिक्त २ लकार लिट् और लङ् के नाम से पुकारे जाते हैं। इनमें से (१) लिट लकार उस भूतकालिक क्रिया का सूचक है, जो परोक्ष हो अर्थात

कहने और सुनने वाले को जिसका प्रत्यक्ष न हो, यही कारण है कि इस लकार के प्रयोग से प्राय: वह घटनायें सूचित की जाती हैं कि जिनको वक्ता और श्रोता की आयु से कहीं अधिक समय बीत चुका हो। जैसे—राम ने रावण को मारा, रावण सीता को हर ले गया, इत्यादि वाक्यों में तो लिट् का प्रयोग करना उचित है। परन्तु 'कल मैंने भोजन नहीं किया' तुमने मेरी पुस्तक क्यों ली?' इत्यादि स्थलों पर इसका प्रयोग नहीं कर सकते क्योंकि यहाँ परोक्षभूत नहीं है। यही कारण है कि इस लकार के रूप प्राय: युस्मद् और अस्मद् से भिन्न प्रथम या अन्यपुरुष ( Third person ) में ही पाये जाते हैं, मध्यम और उत्तम नहीं। इसीलिए संस्कृत जिज्ञासुओं को लिट् लकार के प्रथम पुरुष के तीनों वचनों को विशेषरूप से स्मरण रखना चाहिए।

(२) लङ् लकार उस भूतकालिक क्रिया का सूचक है जो अनद्यतन अन + अद्य + तन हो अर्थात् आज न हुई हो। आज से पहले कल हुई अथवा २ लाख वर्ष पूर्व। इसलिए 'आज' के साथ लङ् का प्रयोग भूलकर भी न करना चाहिए।

## वर्तमान से भूत।

क़िस्सों, कहानियों में भूतकाल के प्रयोग करने की एक यह विधि भी है कि वर्तमानकाल की क्रिया 'वसति' के अन्त में 'स्म' लगा देते हैं। जैसे—'वहाँ शेर रहता था = 'तत्र सिंह: प्रतिवसति स्म'।

## भविष्यत् में २ लकार।

भविष्यत् में 'लृट्' के अतिरिक्त एक लुट् लकार भी है. इसका प्रयोग ( १ ) आज के अतिरिक्त भविष्यत कालमें होता है

(२) प्रायः इसका प्रयोग किसी निश्चित तिथि अथवा काल की मर्यादा होने पर होता है । जैसे उसका यज्ञोपवीत संस्कार २४ तारीख़ को होगा । परन्तु 'मैं आज शाम को जाऊँगा' इत्यादि स्थलों पर आज के कारण लुट् का प्रयोग नहीं कर सकते ।

## विधि और आशीर्वाद ।

'लोट्' लकार तो आज्ञा और आशीर्वाद दोनों अर्थों में होता ही है, साथ ही पृथक् पृथक् रूप से इनके लिए संस्कृत में एक लिङ् लकार भी है । इसके दो भेद समझने चाहिए ।

(१) विधिलिङ्—इसका प्रयोग किसी को आदेश देने के लिए किया जाता है । किन्हीं महानुभावों का यह भी कथन है कि लोट् का प्रयोग होने पर कुछ मृदु आदेश और विधिलिङ् का प्रयोग होने पर अपेक्षाकृत कुछ तीव्र समझना चाहिए । आदेश के अतिरिक्त विधिलिङ् के प्रयोग को 'चाहिए' अर्थ में भी प्रयुक्त करते हैं । जैसे, उसे पढ़ना चाहिए । कहीं कहीं आकांक्षा ( चाह ) को प्रकट करने के लिए भी इसे प्रयुक्त करते हैं । जैसे–हम १०० वर्ष तक जीवें ।

(२) आशीर्लिङ्-इसका प्रयोग आशीर्वाद में होता है ।

## संक्षिप्त विवरण सहित १० लकार ।

इस प्रकार उपर्युक्त दोनों लिङ् सहित कुल १० लकार होते हैं, इनसे काल और अवस्था का बोध होता है । इन्हें कण्ठस्थ करने व समझने के लिए एक चित्र और एक 'कारिका नीचे दी जाती है ।

(१) लट् ( वर्तमान काल Present Tense or Present Indicative mood

(२) लिङ् ( परोक्ष भूत ) Past perfect tense

(३) लुट् ( अनद्यतन भविष्यत् ) ( First ) Future

(४) लृट् सामान्य भविष्यत् ( Simple ) Future

(५) लोट् आज्ञादि Imperative mood

(६) लङ् अनद्यतन भूत Past perfect * Imperfect tense

(७) विधिलिङ् विधि सम्भावना आदि subjunctive mood* and Potential mood

(८) आशीर्लिङ् आशीर्वाद Bendicative

(९) लुङ् सामान्य भूत Aorist ( Past ) *

(१०) लृङ् हेतु हेतु मद्भूत Conditional

लट् वर्तमाने लेट् वेदे भूते लुङ् लङ् लिटस्तथा ।
विध्याशिषास्तु लिङ् लोटौ लुट् लृट् लृङ् च भविष्यति ॥

नोट—लेट् का प्रयोग वेद में ही पाया जाता है। लौकिक संस्कृत में नहीं' ।* (१) अंग्रेजी में इन लकारों को भिन्न नामों से पुकारा है." (२) अंग्रेजी के नाम लकारों का ठीक बोध नहीं कराते ।

## वाच्य ( voice )

जिस प्रकार हिन्दी में यह प्रथा है कि एक ही आशय रखने वाले वाक्यों को भिन्न प्रकार के दो ढंगों से बोलते हैं जैसे (१) मैं इस पुस्तक को नहीं पढ़ता ( कर्तृवाच्य ) (२) मुझसे यह पुस्तक नहीं पढ़ी जाती ( कर्मवाच्य ), तथा (१) मैं नहीं बैठता (कर्तृवाच्य) (२) मुझसे नहीं बैठा जाता ( भाववाच्य ) उसी प्रकार संस्कृत में भी यह तीन वाच्य हैं इन्हें कभी २ कर्त्तरि प्रयोग, कर्मणि प्रयोग, और भावे प्रयोग भी कहते हैं। इनमें से कर्तृ वाच्य यह है जिसमें क्रिया पद कर्त्ता के वचन ( और स्थलानुसार कर्त्ता के लिंग ) के अनुसार चलता है। कर्मवाच्य में क्रिया कर्म के अनुसार चलती है जैसे 'पढ़ी जाती' क्रिया 'पुस्तक' के ( हिंदी भाषानुसार लिंग वचनानुसार है। इस प्रकार जहाँ सकर्मक ( कर्म सहित ) क्रियाओं के आश्रित उक्त

दो ( कर्तृवाच्य और कर्मवाच्य ) भेद होते हैं उसी प्रकार अकर्मक = कर्म-रहित के क्रियाओं आश्रित उक्त दो ( कर्मवाच्य और भाववाच्य ) भेद हो जाते हैं।
(१) इन वाच्यों में से अंग्रेजी में केवल कर्तृवाच्य और कर्म-वाच्य ही होते हैं, भाववाच्य नहीं (२) हिन्दी में कर्तृवाच्य में बोलना अच्छा समझा जाता है, संस्कृत में इस विषय में कुछ कर्मवाच्य और भाववाच्य को विशेष स्थान देते हैं। इसलिये उन वाच्यों में अभ्यास बढ़ाने के इच्छुक हमारे 'आदर्श-संस्कृत-शिक्षक, व छात्रों को पढ़ने पढ़ाने का कष्ट करें।

नोट—हम इस भाग में केवल कर्तृवाच्य में ही क्रिया रूप दे सकने के कारण छात्रों को यह बता देना आवश्यक समझते हैं कि कर्तृवाच्य में वाक्य बनाने में कारकों का कोई उलट फेर करना नहीं पड़ता, कर्त्ता को प्रथमा विभक्ति में रखा जाता है और कर्म को द्वितीया विभक्ति में। क्रिया का प्रयोग कर्त्ता के लिंग वचन और पुरुष के अनुसार चलता है।

## पुरुष Person

पुरुष तीन प्रकार के हैं—प्रथम (अन्य) पुरुष, मध्यम पुरुष और उत्तम पुरुष। यद्यपि अंग्रेजी में प्रथम को First कहते हैं फिर भी यहाँ यह बात विशेष ध्यान देने योग्य है कि व्याकरण में प्रथम पुरुष अंग्रेजी का Third Person है न कि फ़र्स्ट। शेष दो यथाक्रम Second Person और Fist Person कहे जाते हैं। इन दोनों मध्यम और उत्तम पुरुष के सम्बन्ध में यह जानना चाहिये कि अस्मद शब्द के कर्तृकारक के अहम् आवाम् वयं रूप उत्तम पुरुष के और युष्मद शब्द के कर्तृ-कारक के त्वम् युवाम् यूयम् रूप मध्यम पुरुष के कहे जाते हैं। इन शब्दों का क्रिया के साथ लिखित वा पठित प्रयोग हो

अथवा न हो, इनके आशय में क्रिया का वैसा पुरुष माना जाता है, जैसे त्वं पठसि अथवा केवल पठसि कहा जाने पर भी मध्यम पुरुष ही माना जायगा, क्योंकि इसमें 'सि' इसी अर्थ का द्योतक है। उक्त दोनों पुरुषों से अतिरिक्त शब्द प्रथम पुरुष होते हैं इसलिए 'आप' वाचक संस्कृत का भवत् शब्द भी (जिसके रूप पु० में भवान् भवन्तौ भवन्तः और स्त्रीलिंग में भवती भवत्यौ भवत्यः हैं) मध्यम पुरुष न होकर प्रथम पुरुष होने से 'सि' 'थ' 'थः' इत्यादि वाले रूप न लेकर अपने साथ प्रथम पुरुष के 'ति' 'तः' 'न्ति' वाले रूप लेता है। जैसे 'आप पढ़ते हैं' का अनुवाद भवान् पठसि न होकर भवान् पठति होगा। यही कारण है कि जहाँ किसी उच्चपदस्थ वा महान् व्यक्ति को लक्ष्य करके उनके लिए देव, महाराज आदि प्रयुक्त किया जाता है वहाँ भी 'यथाऽऽज्ञापति देवः' इत्यादि ढङ्ग से प्रथम पुरुष प्रयुक्त करते हैं।

## गण।

संस्कृत में समस्त धातु रूप रचना के भेद से दस भागों में बाँटे गये हैं, इन्हें गण (Class) कहते हैं। उनके नाम ये हैं—

भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च।
तुदादिश्च रुधादिश्च तनादिक्रिचुरादयः ॥

अर्थात्—१ भ्वादि, २ अदादि, ३ जुहोत्यादि, ४ दिवादि, ५ स्वादि, ६ तुदादि, ७ रुधादि, ८ तनादि, ९ क्र्यादि और १० चुरादि।

इनको क्रम से प्रथम, द्वितीय, तृतीय, चतुर्थ, पञ्चम, षष्ठ, सप्तम, अष्टम, नवम, तथा दशम गण भी कहते हैं। इसी प्रकार अंग्रेजीमें यह First conjucation Second conjugatiou इत्यादि कहे जाते हैं। गण का अर्थ 'समूह' है इसलिए धातुओं के जिस समूह के आदि में 'भू = होना' धातु है वह

अर्थादिगण एवं जिसके आदि में 'अद् खाना' धातु है वह अदादि गण है। प्रायः एक गण के धातुओं के रूप एक प्रकार से चलते हैं।

## आत्मनेपदी परस्मैपदी और उभयपदी धातु।

धातुओं के आगे लगाई जानेवाली, ति तः न्ति आदि विभक्तियां परस्मैपद की कही जाने के कारण परस्मैपदी बताये हुए धातुओं में जुड़ती हैं और ते एते अन्ते आदि विभक्तियाँ आत्मनेपद की कही जाने के कारण वे आत्मनेपदी बताये हुए धातुओं में जुड़ती हैं। जो धातु ( उभय ) दोनों पदी कहे गये हैं, उनके आगे दोनों प्रकार की विभक्तियाँ जोड़ी जाती हैं। जैसे परस्मैपदी पठति, आत्मनेपदी - सेवते उभयपदी यजति, यजते।

नोट—परस्मै ( दूसरों के लिए ) और आत्मने ( अपने लिए ) इस प्रकार इन दोनों का जो अर्थ है, उसकी दृष्टि से तो यदि क्रिया का फल कर्त्ता को अपने लिए हो तो वहाँ आत्मने पद और अपने से भिन्न के लिए होने पर परस्मैपद होना चाहिए। जैसे—जब कोई अपने लिए यज्ञ करे तो वहाँ 'यजते' और पुरोहितादि रूप में दूसरे ( यजमान ) के लिए यज्ञ करे तो वहाँ 'यजति' कहना चाहिए परन्तु प्रायः इस नियम को नहीं पाला जाता है, जो जहाँ चाहता है उभय में से किसी भी एक पद का प्रयोग कर देता है, (२) यह विचार चल भी तो उभयपदी में ही सकता था परन्तु जो केवल एक पदी ही हैं, उनमें अपने पराये का भेद किया जाना भी तो असम्भव है। ( ३ ) प्र परा आदि उपसर्गों के योग अथवा व्याकरण के किन्हीं विशेष नियमों से एक पद का धातु अन्य पद होजाने पर उसके रूप फिर किस प्रकार लिये जाते हैं, इस विषय का स्पष्टी-करण हमारे अगले भागों में मिलेगा।

# क्रिया और लिङ्ग ।

हिन्दी में कर्त्तृवाच्य में क्रिया कर्त्ता के लिंग के अनुसार रहती है, जैसे—'राम' पुल्लिङ्ग कर्त्ता के साथ 'जाता है' ऐसा कहेंगे किन्तु 'सीता' के साथ 'जाता' है न कह कर 'जाती है' कहेंगे। इसी प्रकार कर्म वाच्य में कर्म के लिंग के अनुसार, जैसे—मुझसे हत्या नहीं देखी जाती, मुझसे यह दृश्य नहीं देखा जाता। परन्तु संस्कृत में ( क्त और क्तवत् के प्रकरण को छोड़ कर ) इन लकार में क्रिया लिंग के अनुसार नहीं बदलती किन्तु जैसे अंग्रेजी में he ( सः ) और She ( सा ) दोनों के साथ एक मात्र goes ही लिखते हैं उसी प्रकार संस्कृत में भी इन दोनों के साथ 'गच्छति' ही लिखेंगे, 'जाता है' और 'जाती है' की भाँति २ बातें नहीं।

भ्वादिगण में सर्व-प्रथम पठित 'भू' धातु ( अर्थ 'होना' के कर्तृवाच्य में दसों लकारों में प्रत्येक रूप का हिन्दी-अर्थ सहित चित्र—

अगले पृष्ठों पर देखिये—

## भू धातु = होना

| | | प्रथमपुरुष | | | मध्यमपुरुष | | | उत्तमपुरुष | | |
|---|---|---|---|---|---|---|---|---|---|---|
| | | वह | वे दोनों | वे सब | तू | तुम दोनों | तुम सब | मैं | हम दोनों | हम सब |
| वर्तमान लट् | होता है | भवति | भव : | भवन्ति | भवसि | भवथः | भवथ | भवामि | भवावः | भवामः |
| आज्ञादि- आशीःलोट् | होवे | भवतु ❀ | भवताम् | भवन्तु | भव * | भवतम् | भवत | भवानि | भवाव | भवाम |
| आज्ञादि विधिलिङ् | होवे | भवेत् | भवेताम् | भवेयुः | भवेः | भवेतम् | भवेत | भवेयम् | भवेव | भवेम |
| अनद्यतन- भूतलङ् | हुआ | अभवत् | अभ- वताम् | अभवन् | अभवः | अभव- तम् | अभवत | अभवम् | अभवाव | अभवाम |
| भविष्यत् लृट् | होगा | भवि- ष्यति | भवि- ष्यतः | भवि- ष्यन्ति | भवि- ष्यसि | भवि- ष्यथः | भवि- ष्यथ | भवि- ष्यामि | भवि- ष्यावः | भवि- ष्यामः |

| परोक्षभूत लिट् | हुआ | बभूव | बभूवतुः | बभूवुः | बभूविथ | बभूवथुः | बभूव | बभूव | बभूविव | बभूविम |
|---|---|---|---|---|---|---|---|---|---|---|
| अनद्यतन भविष्यत् लुट् | होगा | भविता | भवि-तारौ | भवि-तारः | भवि-तासि | भवि-तास्थः | भवि-तास्थ | भवितास्मि | भवितास्वः | भवितास्मः |
| सामान्य-भूत लुङ् | हुआ | अभूत् * | अभूताम् | अभूवन् | अभूः | अभूतम् | अभूत | अभूवम् | अभूव | अभूम |
| आशीर्वाद-आशीर्लिङ् | होवे | भूयात् | भूया-स्ताम् | भूयासुः | भूयाः | भूया-स्तम् | भूयास्त | भूयासम् | भूयास्व | भूयास्म |
| हेतुहेतु-मद्भूत लृङ् | होता | अभवि-ष्यत् | अभवि-ष्यताम् | अभवि ष्यन् | अभवि-ष्यः | अभवि-ष्यतम् | अभवि-ष्यत | अभवि-ष्यम् | अभवि-ष्याव | अभवि-ष्याम |

* आशीर्वाद देने में भवतु और भव के स्थान पर 'भवतात्' भी कह सकते हैं, जैसे—भवतात् अनुपममोदः (आपके लिये) अनुपम हर्ष हो। * इस लकार के सम्बन्ध में आगे के अष्टम संकेत पर विशेष ध्यान दें।

# उपर्युक्त चित्र और आगे लिखे हुए रूपों को समझने के संकेत

उक्त चित्र के सामने आने पर छात्र को चाहिए कि वह सबसे पहले प्रत्येक रूप का हिंदी में अर्थ कहता हुआ उसको इस प्रकार अपने मस्तिक में स्थान दे कि—

भवति = वह होता है।
भवतः = वे दोनों होते हैं।
भवतु = वह होवे।
अभूत् = वह हुआ।

आगे चलकर 'अत = निरन्तर चलना' आदि धातुओं के जो रूप दिये गये हैं, उ में प्रथमपुरुष एक वचन में ही दिये हुए रूप से उक्त चित्रानुकूल शेष ८-८ रूप भी पूरे करते हुए बोलने चाहियें। जैसे 'अतति' को देखकर अतति = वह निरन्तर जाता है, अततः वे दोनों निरन्तर जाते हैं इत्यादि।

( १ ) लट् के रूप बोलने के लिये दिये गये रूप में से 'ति' काट कर शेष भाग में तः न्तिः, सि, थः, थ, ामि, ावः, ामः, जोड़दें।

( २ ) लोट् के रूप बोलने के लिये दिये रूप में से 'तु' काट कर शेष भाग में ताम्, न्तु ० तम्, त, ानि, ाव, ाम जोड़ना चाहिये।

( ३ ) विधिलिङ् के रूप बोलने के लिये दिये गये रूप में से 'त्' काट कर शेष भाग में ताम् युः, ः तम् त, यम, व, म जोड़ना चाहिये।

( ४ ) लङ् के रूप बोलने के लिये दिये गये रूपमें से 'त' काट कर शेष भाग में ताम् नः तम्, य म् ाव ाम, जोड़ना चाहिये

(५) लृट् के रूप बोलने के लिये दिये गये रूप में से 'ति' काट कर शेष भाग में लट् के ढंग वाले तः न्ति सि थः थ मि वः मः जोड़ना चाहिये।

(६) लिट् लकार के प्रयोग में मध्यम पुरुष या उत्तम पुरुष के रूप अनावश्यक होने से भले ही न दिये जाते, परन्तु प्रथम-पुरुष में एक वचन और द्विवचन के रूप अत्यावश्यक है वहां छात्रों को द्विवचन के रूप में से 'अतुः' काट कर शेष में उः जोड़ कर ( जैसे बभूवतः में अतुः काटने पर शेष बभूव् में उः जोड़ कर बभूवुः बनाया है ) अवश्य ही प्रथम पुरुष के तीनों वचनों का अभ्यास कर लेना चाहिये। (ii) मध्यम और उत्तम पुरुष के सब रूप प्रयोग की दृष्टि से अनुपयुक्त होने पर भी हमने इसलिये देने आवश्यक समझे हैं कि प्रथमादि परीक्षाओं के परीक्षक प्रायः इन पुरुषों के रूप भी पूछ बैठते हैं इसलिये परीक्षार्थी को तो यह भाग भी रटना ही है, एक दो रूप देने से छात्र स्वयं उस लकार के कुल रूप नहीं बना सकता इसलिये कुल रूप दिये गये हैं।

(iii) इस लकार के तीनों पुरुषों के वचनों में ३ × ३ = ९ रूपों के स्थान पर जहाँ दस दस या ग्यारह ग्यारह रूप दिये गये हैं वहां हमने एक वचन के ही दोनों दोनों रूपों के बीच में ( = ) चिह्न देदिया है, अर्थ दोनों का एकसा ही रहता है, जैसे—तेपिथ—तू तपा। ततप्थ—तू तपा। जगाद—मैं बोला। जगद—मैं बोला। यह दो दो रूप प्रायः मध्यमपुरुष के एक वचन थल् और उत्तम पुरुष के एक वचन णल् में हुए हैं।

(७) लुट् के रूप बोलने के लिए दिये गये रूप में से 'ता' काटकर शेष भाग में तारौ तारः, तासि, तास्थः, तास्थ, तास्मि, तास्वः, तास्मः जोड़ना चाहिये।

( ८ ) लुङ् लकार में धातुओं के रूप भू धातु के रूप से प्रायः भिन्न हैं। इसलिए हमने अत् धातु के लुङ् के पूरे रूप दिये हैं, आगे के धातु—रूप प्रायः इसी ढङ्ग पर हैं। इसके प्रथम रूप आतीत् में से ईत् काटकर शेष भाग आत् में इष्टाम् इषुः ईः इष्टम् इष्ट इयम् इष्व और इष्म जोड़ कर पूरे रूप बनाने का ढङ्ग ध्यान में रखना चाहिए।

(ii) इस लकार के रूपों में जहाँ आरम्भ में अगादीत, अगदीत ऐसे २ रूप लिखे गये हैं उन्हें केवल प्रथमपुरुष एक वचन में दो रूपों का बनना न समझ कर तीनों पुरुषों के तीनों वचनों में दो दो रूप बने हुए समझने चाहिएँ।

( ९ ) आशीर्लिङ् के रूप बोलने के लिए दिये गये रूप में से 'यात' काट कर शेष भाग में यास्ताम, यासुः याः, यास्तम्, यास्त, यासम्, यास्व, यास्म जोड़ना चाहिये।

(१०) लृङ् के रूप बोलने के लिए ष्य अथवा स्थित्यनुकूल स्य के पश्चात् लङ् वाले त् ताम् चिन्ह बढ़ाने चाहिएँ।

स्थान स्थान पर आगे भी हमने आत्मनेपदी धातु आदि के सम्बन्ध में जो परिवर्धन किये हैं, उन्हें बड़ी सावधानता से हृद्गत रखना चाहिए।

## इस भाग की उपयोगिता और अनुवाद बनाने के सम्बन्ध में।

इस भाग में दिये हुए संस्कृत वाक्यों का हिन्दी अनुवाद बना सकने के लिये यह आवश्यक है कि वह संस्कृत वाक्य उन कारक रूपों और क्रिया रूपों से सम्बद्ध हों जो संस्कृतशिक्षा के तीसरे भाग तक और इस भाग के उस अनुवाद-वाक्य दिये जाने से पहले आचुके हों।

इसलिये—

हमने यह देखकर कि इस भाग तक का विद्यार्थी भाववाच्य और कर्मवाच्यकी वाक्य-रचना अथवा निष्ठा (क्त) प्रत्यय के कर्तृवाच्य से अबोध है, इस भाग में लकारों से सम्बद्ध कर्तृवाच्य वाक्यों को ही स्थान दिया है, साथ ही यह जान कर कि इन वाक्यों के विना केवल कर्तृवाच्य में संस्कृत रचना कुछ श्रेष्ठ नहीं मानी जाती अथवा भूतकालिक लकारों के प्रयोगों की अपेक्षा निष्ठ (क्त) और क्तवतुके प्रयोग सहित वाक्य सुन्दर माने जाते हैं, दूसरे यह सोच कर कि अनुवाद के लिये कारक–रूप और समापिका ( वाक्य को समाप्त करने वाली ) क्रिया के रूपों के अतिरिक्त प्रायः सभी उपयोगी धातुओं के तुमुन् शतृ शानच् अनीयर् यत् प्रत्यय आदि के रूप आवश्यक हैं, जहां हम उस निमित्त छात्रों को अगले परिवर्धित–भाग देखने की प्रेरणा करेंगे, वहाँ यह लिखना उचित समझते हैं कि—

## संस्कृत से हिन्दी में अनुवाद बनाने के लिए--

(१) सब से पहिले अध्येत अपने मस्तिष्क-बल का प्रयोग कर सन्धि विच्छेद करते और साथ ही यह सोचते हुए कि किस प्रातिपदिक का किस किस विभक्ति में यह रूप बनता है और उनमें से यहां यह कौनसी विभक्तिका रूप उपयोगी है, वाक्य के एक एक शब्द को पृथक् पृथक् कर उसके अर्थ लगाने का प्रयत्न करें और फिर आगे संस्कृत बनाने के लिये दिये हुए हिंदी मूलवाक्य से अपने उस अर्थ की जांच करें।

(२) सम्भव है कि संस्कृत वाक्यों में कुछ ऐसे भी शब्द आगये हों जिनकी हिंदी तक पढ़ने में न आई हो, तो हिंदी

देख कर प्रयत्न पूर्वक उन शब्दों को उनके अर्थ सहित अपनी स्मृति या नोटबुक में चढ़ा लें।

## हिंदी से संस्कृत में अनुवाद बनाने के लिये

(१) इस बात को अपने मन से निकाल कर अनुवाद बनाना चाहिये कि संस्कृत से भाषा बनाते समय का तो हमें इस हिंदी वाक्य का संस्कृत वाक्य कण्ठस्थ ही है।

(२) अपने संस्कृतानुवाद में पहिले दिये संस्कृत-वाक्यान्तर्गत शब्दों से भिन्न शब्दों का प्रयोग करने का अभ्यास किया जावे। परन्तु उनके रूपों को आदर्श वाक्य के कारक रूपों से मिलाया जावे।

(३) अपने संस्कृतानुवाद को बिना सन्धि की दशा में रख कर, फिर उस पर सन्धि नियमों का प्रयोग कर उसे आदर्श संस्कृत वाक्यों से मिलाया जावे।

(४) पुस्तकस्थ ६-१० अभ्यास-वाक्यों के संस्कृत या भाषानुवाद पर सन्तोष न कर उपर्युक्त शब्दों द्वारा उस उस अभ्यास में पचासों वाक्य बनाये जावें क्योंकि एक एक धातु के कम से कम ६० और एक एक प्रातिपदिक के २० से ऊपर रूप चलने से इतनी सामग्री के आधार पर भी पर्याप्त अनुवाद बनाया जा सकता है और बनाना चाहिये।

यह आवश्यक नहीं कि 'वह सामग्री से अग्नि में हवन करता है' का अनुवाद 'जुहोति हव्येन हिरण्यरेतसम्' ही बनाया जावे किन्तु जहाँ यह वाक्य भी स्मरण में रहे वहां इस का दूसरा परन्तु शुद्ध संस्कृतानुवाद 'जुहोति हव्येन जातवेदसम्' या 'जुहोति हुतभुजं हव्येन' या 'आशुशुक्षणि हव्येन जुहोति' अथवा असावनलं हव्येन जुहोति आदि बनाया जा सके।

## २ अत = निरन्तर चलना ।

लट्–अतति । लिट्–आत आततुः आतुः । आतिथ आतथुः आत । आत आतिव आतिम । लुट्–अतिता० । लृट् अतिष्यति । लोट्–अततु० । लङ्–आतत् आतताम् आतन् । आतः आततम् आतत । आतम् आताव आताम । विधिलिङ्–अतेत्० । आ० लिङ्–अत्यात् अत्यास्ताम् अत्यासुः । अत्याः अत्यास्तम् अत्यास्त । अत्यासम् अत्यास्व अत्यास्म । लुङ्—आतीत् आतिष्टाम् आतिषुः । आतीः आतिष्टम् आतिष्ट । आतिषम् आतिष्व आतिष्म । लृङ् आतिष्यत्० ।

## ३ षिध = जानना, जाना, प्रापण

लट्–सेधति । लिट्—सिषेध सिषिधतुः सिषिधुः । सिषेधिथ सिषिधथुः सिषिध । सिषेध सिषिधिव सिषिधिम । लुट्-सेधिता । लृट् सेधिष्यति । लोट्—सेधतु । लङ्–असेधत् असेधताम् असेधन् । असेधः असेधतम् असेधत । असेधम् असेधाव असेधाम । विधिलिङ्—सेधेत् । आशीर्लिङ्—सिध्यात् सिध्यास्ताम् सिध्यासुः । लुङ्—असेधीत् असेधिष्टाम् असेधिषुः । लृङ्—असेधिष्यत् ।

## ४ चिती = जानना, स्मरण ।

लट—चेतति । लिट् चिचेत चिचिततुः चिचितुः । चिचेतिथ चिचितथुः चिचित । चिचेत चिचितिव चिचितिम ॥ लुट—चेतिता । लृट्—चेतिष्यति ॥ चेततु । अचेतत् चेतेत् । चित्यात् चित्यास्ताम् चित्यासुः । अचेतीत् अचेतिष्टाम् अचेतिषुः । अचेतिष्यत् ।

## शुच = शोक, सोच करना ।

शोचति । शुशोच शुशुचतुः शुशुचुः, शुशोचिथ शुशुचथुः

शुशुच, शुशोच शुशुचिव शुशुचिम । शोचिता । शोचिष्यति । शोचतु । अशोचत् । शोचेत् शोचेताम् शोचेयुः । शुच्यात् शुच्यास्ताम् शुच्यासुः । अशोचीत् अशोचिष्टाम् अशोचिषुः । अशोचिष्यत् ।

---

नागरिकम्* = शहर का । ग्राम्यम् = गाँव का । वन्यम् = वन में पैदा हुआ । गिरिजम् = पर्वत में जन्मा । सामुद्रम् = समुद्र का । पार्थिवम् = पृथ्वी का । अप्यम्=जल का । तैजसम् = तेजका । वायव्यम् = वायु का । आम्बरम = आकाश का । मार्तिकम् = मिट्टी का । औपलम् = पत्थर का । सौवर्णम् = सोने का । राजतम् = चांदी का । पैत्तलम्=पीतल का । खनिजम् = खान में पैदा हुआ । हृद्यम् = मनोहर । व्यवसायः = उद्यम, रोज़गार । आचरणम् = चाल चलन । कज्जलम् = काजल ।

## ( अभ्यास १ )

## भाषा बनाओ ।

नागरिकाणि वस्तूनि हृद्यानि भवन्ति, ग्राम्या प्रजा मे कथनं करोति । लक्ष्मीः वदति–श्वो मे गेहे होमो भविता । ह्योऽत्र किमभवत् । यदाहमागच्छेयं तदा यूयं तत्रैव भवेत । भवन्तो विद्यावन्तो धनवन्तो बलवन्तो भूयासुः । यदि यूयं पठने श्रममकरिष्यत तर्हि शीघ्रमेव विद्वांसोऽभविष्यत । गिरिजानि फलानि मिष्टानि भवन्ति । अत्रत्यानि मार्तिकानि पात्राणि सुष्ठु

---

* नागरिकम् आदि शब्दों का प्रयोग जहां पुल्लिग शब्दों के विशेषण रूप से आवेगा वहाँ इनके रूप शब्द भेद से बालक या मनुष्य की भांति चलेंगे नकि नपुंसक। जैसे नागरिकं वस्तु, परन्तु नागरिकः जनः ।

जायन्ते ? । तत्रत्यानि समानि मन्दिराण्यौपलानि सन्ति। एषां बालकानां चरितं कीदृशमस्ति । तेषां वाक्यानि शोभनानि पवित्राणि अनुकरणार्यानि च विद्यन्ते ।

( अभ्यास २ )

## संस्कृत बनाओ ।

शहर की चीजें सुन्दर होती हैं । गाँव की प्रजा मेरा कहना मानती है । लक्ष्मी कहती है कि कल मेरे घर पर हवन होगा । कल यहाँ पर क्या २ हुआ । जब मैं आऊँ तब तुम वहाँ होना। ईश्वर करे आप विद्यावान् धनवान् बली होवें। यदि तुम पढ़ने में मेहनत करते तो जल्द विद्वान् होजाते । पहाड़ के फल मीठे होते हैं। क्या यहाँ के मिट्टी के बर्तन अच्छे होते हैं ? वहाँ के सब मन्दिर पत्थर के हैं। इन लड़कों का चालचलन कैसा है ? उनके वाक्य सुन्दर पवित्र और अनुकरण करने के योग्य हैं ।

## ६ गद = स्पष्ट बोलना ।

गदति । जगाद जगदतुः जगदुः जगदिथ जगदथुः जगद, जगाद = जगद, जगदिव जगदिम । गदिता । गदिष्यति । गदतु । अगदत् । गदेत् । गद्यात् । अगादीत् । अगदिष्यत् ।

## ७ णद् = घटादि का शब्द जो समझ में न आसके ।

नदति । ननाद. नेदतुः नेदुः । नदिता । नदिष्यति । नदतु अनदत् । नदेत् । नद्यात् । अनादीत् अनदीत्, अनादिष्टाम्, अनदिष्टाम् अनादिषुः. अनदिषुः, अनदिष्यत् ।

## ८—टुनदि = फलना, फूलना आनन्द होना

नन्दति । ननन्द ननन्दतुः ननन्दुः । ननन्दिथ । नन्दिता ।

नन्दिष्यति । नन्दतु । अनन्दत् । नन्देत् । नन्द्यात् नन्द्यास्ताम् नन्द्यासुः । अनन्दीत् अनन्दिष्टाम् अनन्दिषुः । अनन्दिष्यत् ।

## ६—अर्च-सत्कार करना ।

अर्चति । आनर्च आनर्चतुः आनर्चुः । आनर्चिथ आनर्चथुः आनर्च । आनर्च आनर्चिव आनर्चिम । अर्चिता । अर्चिष्यति अर्चतु । *आर्चत् आर्चताम् आर्चन् । अर्चेत अर्चेताम् अर्चेयुः । अर्च्यात् अर्च्यास्ताम् अर्च्यासुः । आर्चीत्* आर्चिष्टाम् आर्चिषुः । आर्चिष्यत् ।

## १० व्रज-जाना

व्रजति । वव्राज वव्रजतुः वव्रजुः । वव्रजिथ वव्रजथुः । वव्रज वव्राज=वव्रज, वव्रजिव वव्रजिम । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् । अव्राजीत् अव्राजिष्टाम् अव्राजिषुः । अव्राजिष्यत् ।

आक्षेपः =ताना देना । विक्षेपः=फेंकना । निशाकरः= चन्द्रमा । दिवाकरः = सूर्य्य । दूषणम् = ऐब, एतराज़ । विस्मयापन्नः = हैरान । संशयापन्नः = संशय में पड़ा हुआ । भव्यम्= शुभ सत्य, शानदार । परमार्थविदः = परोपकारी । पुष्कलम्= बहुत काफी । दृढमुष्टिः = कंजूस । नाकम्=स्वर्ग, सुख ॥

### ( अभ्यास ३ )

### भाषा बनाओ ।

जगाद भूयो जगदेकनाथः । कति घण्टा नदन्तीदानीम् ।

---

*जो स्वरादिधातु हैं उनके लङ् लुङ् और लृङ् के रूप के प्रारम्भ में आट्=आ बढ़ाने और उसको धात्वादिस्थ स्वर से वृद्धि सन्धि करने पर आ+अ, आ = आ, आ+इ ई ए ऐ = ऐ आ+उ, ऊ, ओ औ = औ हो जाता है ।

आर्चीद् द्विजातीन् परमार्थविन्दान् । किमहं गदानि भवतां विदुषां पुरस्तात् । भवन्ति भव्येषु हि पक्षपाताः । अद्य दिवाकरस्य सन्तापस्तीव्रोऽस्ति । निशाकरस्य किरणा मोदयन्ति ।

( अभ्यास ४ )

## संस्कृत बनाओ ।

१—जगत् का बनाने वाला ईश्वर है २—इस समय कितने घंटे बज रहे हैं ३—परोपकारी द्विजातियों का सत्कार करें ४—आप विद्वनों के आगे मैं क्या कहूँ ५—निश्चय ही श्रेष्ठों में पक्षपात होते हैं ६—आज सूर्य की गर्मी (धूप) तेज है ७—चन्द्र किरणें प्रसन्न कर रही हैं ।

## ११ कट—वर्षना, ढांकना ।

कटति । चकाट । कटिता । कटिष्यति । कटतु । अकटत । कटेत् । कट्यात् । अकटीत् । अकटिष्यत् ।

## १२—गुप्=रक्षण, बचाना ।

गोपायति । लिट् (१) गोपायाञ्चकार गोपायाञ्चक्रतुः गोपायाञ्चक्रुः । गोपायाञ्चकर्थ गोपायाञ्चक्रथुः गोपायाञ्चक्र । गोपायाञ्चकार, गोपायाञ्चकर । गोपायाञ्चकृव गोपायाञ्चकृम । (२) गोपायाम्बभूव गोपायाम्बभूवतुः गोपायाम्बभूवुः । गोपायाम्बभूविथ गोपायाम्बभूवथुः गोपायाम्बभूव । गोपायाम्बभूव गोपायाम्बभूविव गोपायाम्बभूविम (३) गोपायामास गोपायामासतुः गोपायामासुः । गोपायामासिथ गोपायामासथुः गोपायामास । गोपायामास गोपायामासिव गोपायामासिम । (४) जुगोप जुगुपतुः जुगुपुः । जुगोपिथ=जुगोप्थ, जुगुपथुः जुगुप जुगोप जुगुपिव=जुगुप्व जुगुपिम=जुगुप्म । लुट—(१) गोपायिता, (२) गोपिता, (३) गोप्ता लृट—(१) गोपायिष्यति, (२) गोपिष्यति, (६) गोप्स्यति । लोट् गोपायतु । अगोपायत ।

गोपायेत् गोपायेताम् गोपायेयुः। आ० लि० (१) गोपाय्यात् गोपाय्यास्ताम् गोपाय्यासुः (२) गुप्यात् गुप्यास्ताम् गुप्यासुः। लुङ् (१) अगोपायीत् (२) अगोपीत् (३) अगौप्सीत् अगौप्ताम् अगौप्सुः। अगौप्सीः अगौप्तम् अगौप्त। अगौप्सम् अगौप्स्व अगौप्स्म। लृङ् (१) अगोपायिष्यत् (२) अगोपिष्यत् (३) अगोप्स्यत्।

## १३—क्षि = नाश होना

क्षयति। चिक्षाय चिक्षियतुः चिक्षियुः चिक्षयिथ = चिक्षेथ चिक्षियथुः चिक्षिय। चिक्षाय = चिक्षय चिक्षियिव चिक्षियिम क्षेता। क्षेष्यति। क्षयतु। अक्षयत्। क्षयेत्। क्षीयात् क्षीयास्ताम् क्षीयासुः। अक्षैषीत् अक्षैष्टाम् अक्षैषुः * १। अक्षेष्यत्।

## १४—तप = तपना, जलना

तपति। तताप तेपतुः तेपुः, तेपिथ = ततप्थ तेपथुः तेप तताप = ततप तेपिव तेपिम। तप्ता। तप्स्यति। तपतु। अतपत्। तपेत्। तप्यात्। अताप्सीत् अताप्ताम् अताप्सुः अताप्सीः अताप्तम् अताप्त। अताप्सम् अताप्स्व अताप्स्म। अतप्स्यत्।

## १५—क्रमु = टहलना, चलना

* २ क्राम्यति, क्रामति। चक्राम चक्रमतुः चक्रमुः। चक्रमिथ चक्रमथुः चक्रम। चक्राम = चक्रम चक्रमिव चक्रमिम। क्रमिता। क्रमिष्यति। * २ क्राम्यतु, क्रामतु। * २ अक्राम्यत्, अक्रामत्। * २ क्राम्येत्, क्रामेत्। क्रम्यात् क्रम्यास्ताम् क्रम्यासुः। अक्रमीत् अक्रमिष्टाम् अक्रमिषुः। अक्रमिष्यत्।

---

* १ अक्षैषीः अक्षैष्टम् अक्षैष्ट अक्षैषम् अक्षैष्व अक्षैष्म।

* २ प्रथमपुरुष के एक वचन में दिये हुए दो दो रूप इस धातु के लट् लोट लङ् और विधिलिङ्ग में से सर्वत्र दो दो रूप अर्थात् ९×२ = १८, १८ रूप बनने की सूचना दे रहे हैं।

## १६—पा = पीना।

पिबति। पपौ पपतुः पपुः। पपिथ = पपाथ पपथुः पप। पपौ पपिव पपिम। पाता। पास्यति। पिबतु। अपिबत्। पिबेत्। पेयात् पेयास्ताम् पेयासुः। अपात् अपाताम् अपुः *१। अपास्यत्।

## १७—ग्लै = ग्लानि करना, नफ़रत।

ग्लायति। जग्लौ जग्लतुः जग्लुः, जग्लिथ जग्लथुः जग्ल जग्लौ जग्लिव जग्लिम। ग्लाता। ग्लास्यति। ग्लायतु। अग्लायत्। ग्लायेत्। ग्लायात् ग्लायास्ताम् ग्लायासुः *२ ग्लेयात् ग्लेयास्ताम् ग्लेयासुः। अग्लासीत् अग्लासिष्टाम् अग्लासिषुः। अग्लास्यत्।

## १८ हृ = कुटिलता करना।

ह्वरति। जह्वार जह्वरतुः जह्वरुः जह्वर्थ जह्वरथुः जह्वर। जह्वार = जह्वर जह्वरिव जह्वरिम। ह्वर्ता ह्वरिष्यति। ह्वरतु। अह्वरत्। ह्वरेत्। ह्वर्यात्। अह्वार्षीत् *। अह्वरिष्यत्।

## १६—श्रु = सुनना।

शृणोति *४। शुश्राव शुश्रुवतुः शुश्रुवुः, शुश्रोथ शुश्रुवथुः शुश्रुव

---

*१ मध्यम पुरुष अपाः, अपातम्, अपात, उत्तम पुरुष अपाम् अपाव अपाम।

*२ आशीर्लिङ्ग में १८ रूप

*३ अह्वार्ष्टाम् अह्वार्षुः अह्वार्षीः अह्वार्ष्टम् अह्वार्ष्ट अह्वार्षम् अह्वार्ष्व अह्वार्ष्म।

*४ शृणुतः शृण्वन्ति। शृणोषि शृणुथः शृणुथ। शृणोमि शृणुवः = शृण्वः, शृणुमः = शृण्मः।

राजा चुकोप। तस्मिन्नेव काले निःसारितः। मन्त्री च स्वगृहं जगाम। अन्यस्मिन् दिने राजा आखेटं कुर्वन् सन् द्वितीयराज्ये जगाम। तत्रत्यस्य भूपस्य बलिप्रदानाय एकस्य नरस्य आवश्यकता आसीत्। राजसेवका एनं राजानं संगृह्य नीतवन्तः। यदा तत्रत्यैः पण्डितैरेव राजावलोकितस्तदा तैश्छिन्नाङ्गुलि हीनाङ्गं दृष्ट्वा कथितम्। अङ्गभङ्गस्य नरस्य बलिदानं न क्रियते। तदा स राजा मुक्तोऽभूत्। तदा भूपालो मनसि निर्धारितवान्। ईश्वरो यत् किञ्चिद् विदधाति तद् हितायैव। पुनः स्वभवनमागत्य स राजा मानपुरःसरं मन्त्रिणमाहूय उवाच। मन्त्रिन्! सत्यं यदीश्वरः करोति तत्सर्वं हितायैव।

## व्यायामः।

व्यायामेन शरीरस्य रक्षा सम्यग् भवति। आबालमेनदवगच्छन्ति यत्खलु शारीरिकं श्रमं किञ्चित् कार्यं वा पुरुषोऽकृत्वा शरीरस्य स्वास्थ्यं रक्षितुं न समर्थो भवति। स्वास्थ्यविनाशे सति विचारशक्तेरपि ह्रासो जायते। विचारशक्तौ विनष्टायां सत्यां मनुष्यस्य शतमुखविनिपातोऽनायासेन जायते। जगति बहवो मनुजाः प्रातः कालमारभ्य सायं कालमन्नलाभाय परिश्रमन्ति। तेषां स्वस्थता सम्यग् जायते। परन्तु ये मानवा दिवसे प्रतिक्षणमुपविश्य कार्यं कुर्वते तैः पुरुषैः स्वास्थ्यलाभाय व्यायामोऽवश्यं करणीयः। ये विद्यार्थिनः प्रतिसमयम् उपविश्य पुस्तकानां केवलं मननं वा विदधते तेषामपि स्वास्थ्यं व्यायामं विना नश्यति। व्यायाममन्तरा कायः शैथिल्यमापद्यते। व्यायामेन देहस्याऽवयवाः पुष्टिं प्रयान्ति। शरीरं दर्शनीयमुपयाति। यथाकालं क्षुधा प्रादुर्भवति। व्यायामेन कुरूपोऽपि जनः सुरूपो जायते। व्यायामशालस्य नरस्य देहं रोगा नाभिभवन्ति।

उक्तं च — व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्त्तितस्य च।

व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः॥

## स्वाध्यायोऽध्येतव्यः ।

स्वाध्यायः परमो धर्मो मानवानाम् विशेषतो विद्याप्रियाणाम् । यथा यथा मानवः प्रकृतिबन्धनमतीत्य आत्मतत्वविवेचनाय ग्रन्थानां परिशीलनं विदधाति तथा तथा तस्य ज्ञानार्जनस्पृहा वर्धते । पूर्वजानामृषीणां ब्राह्मणानां शूराणां राजन्यानां धर्मनिष्ठानां वैश्यानाम्, सेवाधर्माणां शूद्राणां च चरित्राणि ग्रन्थानामवलोकनेनैव जायन्ते । पूर्वजानां क आचाराः, के विचाराः का विद्या का अविद्या, कीदृशी राजनीतिः, किं गौरवं किं शौर्यं, कोधर्मः कोऽधर्मः, किं खाद्यम्, किमखाद्यम् के वर्णाः क आश्रमाः वर्णाश्रमाणां च कावश्यकता, को लाभश्चैतेषां प्रश्नानामुत्तराणि स्वयं लभ्यन्ते । स्वाध्यायः किल बोधयति मानवानामात्मानम्, तत्कृत्वा नितान्तं तृष्यति नरः । पुरा भारते स्वाध्यायस्य मुख्यः नियम आसीत । उक्तं च शतपथे—

ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति

पुरा बाला उपनीता अनुपनीत वा गुरुकुलं प्रेष्यन्ते स्म । तत्रानुपनीता बाला गुरुणैव तद्वर्णाधिकारानुसारमुपनीयन्ते स्म । स एव कालस्तेषां विद्याध्ययनस्य, ब्रह्मचर्येण गुरौ वसन्तः सन्तः विद्यामनुशीलयामासुः । गुरुकुलानि हि नगराद् बहिः नद्याः कूले कुत्रचिद् वने प्रतिष्ठाप्यन्ते स्म । तत्र केवलं ब्रह्मचारिण एव निवसन्ति स्म । गुरवः मनसा वाचा कर्मणा तेषां हितमीहमानाः सदाध्यापयन्ति स्म । यथा च यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि । स्वाध्यायान्मा प्रमदेति ॥ गुरवः स्वकीयेन पवित्रेण जीवनेन स्वकान् शिष्यान् धर्मोपदेशेन पावयन्ति स्म । तदानींतनानां जनानां जीवनानि धन्यान्यासन् ॥

—: ० :—

॥ स्तुतिः ॥

नो सोदरो न जनको जननी न जाया,
नैवात्मजो न च कुलं विपुलं बलं वा ।
संदृश्यते न किल कोऽपि सहायको मे,
तस्मात्त्वमेव शरणं मम दीनबन्धो ! ॥१॥
पूर्वं कृतानि दुरितानि मया तु यानि,
स्मृत्वाखिलानि हृदयं परिकम्पते मे ।
ख्याता च ते पतितपावनता दयालो !
तस्मात्त्वमेव शरणं मम दीनबन्धो ! ॥२॥
गायन्ति सामकुशला यमजं मखेषु,
ध्यायन्ति धीरमतयो यतयो विविक्ते ।
पश्यन्ति योगिपुरुषाः पुरुषं शरीरे,
वन्दे महापुरुष ! ते चरणारविन्दम् ॥३॥
तीर्थादिसेवनमहाविधिना हि नाथ !
नान्तर येन मनसो मम शोधनं स्यात् ।
शुद्धिं विना न मनसो स्वर्गापवर्गौ,
तस्मात्त्वमेव शरणं मम दीनबन्धो ! ॥४॥
तप्तं तपो नहि कदापि मयेह तन्वा,
वाण्या तथा नहि कदापि तपश्च तप्तम् ।

...भिभाषणपरेण न च मानसं हि तस्मात्त्वमेव० ॥ ५ ॥

स्तब्धं मनो मम सदा नहि याति सौम्यं, चक्षुश्च मे न तव पश्यति विश्वरूपम् । वाचा च नैव गदिता खलु सौम्यवाणी तस्मा... ॥

दुर्वासना मम सदा परिकर्षयन्ति चित्तं शरीरमपि रोगगणा दहन्ति । संजीवनं च परहस्तगतं सदैव तस्मात्० ॥ ७ ॥

मनुजदेहमिमं भुवि दुर्लभं समधिगम्य सुरैरपि वाञ्छितम् ! विषयलम्पटतामपहाय तौ भजत भो मनुजाः ! परमेश्वरम् ॥ ८ ॥

न वनिता न सुतो न सहोदरो नहि पिता जननी न च बान्धवः व्रजति साकमनेन जनेन तौ भजत भो मनुजाः परमेश्वरम् ॥ ९ ॥

सकलमेव चलं सचराचरं जगदिदं सुतरां धनयौवनम् । समवलोक्य विवेकदृशा द्रुतं भजत भो मनुजाः ! परमेश्वरम् ॥ १० ॥